वानरस्यसत्वस्यवानरीयबलस्यपरीक्षणार्थमिदमब्रुवन् विचारयामासुरित्यर्थः तद्वक्ष्यति एवंविचार्येतिधातूनामनेकार्थत्वात् ब्रूवोऽपिवि-
चारेवृत्तिः ९ लंकाप्रवेशेशक्तोऽथवानेतिसंदेहस्तस्मादस्यबलंजानीमहे निर्णेष्यामइत्यर्थः १० देवतावृंदः देवतासमूहः ११ १२ १३



परीक्षणार्थंसत्वस्यवानरस्येदमब्रुवन् गच्छत्येषमहासत्वोवानरोवायुविक्रमः ९ लंकांप्रवेष्टुंशक्तोवानवाजानी
महेबलम् एवंविचार्यनागानांमातरंसुरसाभिधाम् १० अब्रवीद्देवतावृंदःकौतूहलसमन्वितः गच्छत्वंवानरे
द्रस्यकिंचिद्विघ्नंसमाचर ११ ज्ञात्वातस्यबलंबुद्धिंपुनरेहित्वरान्विता इत्युक्तासाययौशीघ्रंहनुमद्विघ्नकारणात्
१२ आवृत्यमार्गंपुरतःस्थित्वावानरमब्रवीत् एहिमेवदनंशीघ्रंप्रविशस्वमहामते १३ देवैस्त्वंकल्पितोभक्षःक्षुधा
संपीडितात्मनः तामाहहनुमान्मातरहंरामस्यशासनात् १४ गच्छामिजानकींद्रष्टुंपुनरागम्यसत्वरः रामाय
कुशलंतस्याःकथयित्वात्वदाननम् १५ निवेक्ष्येदेहिमेमार्गंसुरसायैनमोऽस्तुते इत्युक्तापुनरेवाहसुरसाक्षुधि
ताऽस्म्यहम् १६ प्रविश्यगच्छमेवक्त्रंनोचेत्त्वांभक्षयाम्यहम् इत्युक्तोहनुमानाहमुखंशीघ्रंविदारय १७ प्रवि
श्यवदनंतेऽद्यगच्छामित्वरयाऽन्वितः इत्युक्त्वायोजनायामदेहोभूत्वापुरःस्थितः १८ दृष्ट्वाहनुमतोरूपंसुर
सापंचयोजनम् मुखंचकारहनुमान्द्विगुणंरूपमादधत् १९ ततश्चकारसुरसायोजनानांचविंशतिम् वक्त्रं
चकारहनुमांस्त्रिंशद्योजनसंमितम् २०

क्षुधासंपीडितआत्मायस्यास्तस्याइत्यर्थः १४ १५ निवेक्ष्येप्रवेक्ष्यामि १६ मेवक्त्रं
प्रविश्यततोनिसृत्यगच्छेत्यर्थः १७ योजनमात्रदीर्घदेहः १८ १९ त्रिंशद्योजनसम्मितंवपुश्चकारेतिशेषः २० ६२ ६२

श्रीगणेशायनमः॥ ॥शतेति लिलंघयिषुः स्वार्थेणिच् आनंदसंदोहः तत्समूहरूपः तत्समूहवान्वा १ २ रामनिर्मुक्तंरामत्यक्तम् पश्या-
मीतिभाविन्यपिवर्त्तमानत्वारोपोवश्यंभावित्वद्योतनाय ३ कृतार्थःजगन्मातृदर्शनेनेतिभावः ममसमुद्रलंघनमकिंचित्करमित्याह प्राणेति
४ अपारमित्युभयान्वयि त्रिविधपरिच्छेदशून्यंतत्पदंतत्स्वरूपम् तदंगभूताया अंगुलिस्तद्भूषणभूतायामुद्रिकासा अस्यास्तीत्यर्शाद्यच्

श्रीमहादेवउवाच शतयोजनविस्तीर्णंसमुद्रंमकरालयम् लिलंघयिषुरानंदसंदोहोमारुतात्मजः १ ध्यात्वारामंप
रात्मानमिदंवचनमब्रवीत् पश्यंतुवानराःसर्वेगच्छंतंमांविहायसा २ अमोघंरामनिर्मुक्तंमहाबाणमिवाखिलाः प
श्यास्यद्यैवरामस्यपत्नींजनकनंदिनीम् ३ कृतार्थोऽहंकृतार्थोऽहंपुनःपश्यामिराघवम् प्राणप्रयाणसमयेयस्य
नामसकृत्स्मरन् ४ नरस्तीर्त्वाभवांभोधिमपारंयातितत्पदम् किंपुनस्तस्यदूतोऽहंतदंगांगुलिमुद्रिकः ५ तमेव
हृदयेध्यात्वालंघयाम्यल्पवारिधिम् इत्युक्त्वाहनुमान्बाहूप्रसार्यायतवालधिः ६ ऋजुग्रीवोर्ध्वदृष्टिःसन्नाकुंचि
तपदद्वयः दक्षिणाभिमुखस्तूर्णंपुप्लुवेऽनिलविक्रमः ७ आकाशात्त्वरितंदेवैर्वीक्ष्यमाणोजगामसः दृष्ट्वानिलसु
तंदेवागच्छंतंवायुवेगतः ८

५ अल्पवारिधिमित्यपारभवांभोधेर्व्यतिरेकालंकारः तंलंघयामीतिकिंवक्तव्यमित्यन्वयः बाहू इत्यादि
वानरोत्प्लुवनजातिवर्णनम् आयतवालधिःप्रसारितपुच्छः ६ ऋजुग्रीवऊर्ध्वदृष्टिरित्यर्थः कर्मधारयः अनिलोवायुः तत्सदृशपराक्रमः ७ आ
काशात् आकाशेस्थित्वेत्यर्थः ८ कौसल्याहृदयायदशरथात्मजायसीतापतयेअयोध्याधीशायराघवायनमोऽस्तु ७ ७ ७

कथंभवेदित्यादेरनुचितंतदित्यर्थः तत्रहेतुर्गंतव्यंत्वरितंमयेति ३३ कराग्रेणस्पृष्टशिखरोययावित्यन्वयः छायास्पर्शमात्रेणजंतूनांगतिनिरोधेनाकर्ष
कश्छायाग्रहइत्युच्यते ३४ तदेवाह सिंहिकेति भक्षयतिइत्यर्थेआर्षः ३५ ३६ विस्मयआश्चर्यंयत्कस्याप्यदर्शनंवेगरोधश्चेत्याश्चर्यम्



गच्छतोरामकार्यार्थंभक्षणंमेकथंभवेत् विश्रामोवाकथंमेस्याद्गंतव्यंत्वरितंमया ३३ इत्युक्त्वास्पृष्टशिखरः
कराग्रेणययौकपिः किंचिद्दूरंगतस्यास्यछायांछायाग्रहोऽग्रहीत् ३४ सिंहिकानामसाघोराजलमध्येस्थितास
दा आकाशगामिनांछायामाक्रम्याकृष्यभक्षयेत् ३५ तयागृहीतोहनुमांश्चिंतयामासवीर्यवान् केनेदंमेकृतंवे
गरोधनंविघ्नकारिणा ३६ दृश्यतेनैवकोप्यत्रविस्मयोमेप्रजायते एवंविचिंत्यहनुमानधोदृष्टिंप्रसारयत् ३७
तत्रदृष्ट्वामहाकायांसिंहिकांघोररूपिणीम् पपातसलिलेतूर्णंपद्भ्यामेवाहनद्रुषा ३८ पुनरुत्प्लुत्यहनुमान्द-
क्षिणाभिमुखोययौ ततोदक्षिणमासाद्यकूलंनानाफलद्रुमम् ३९ नानापक्षिमृगाकीर्णंनानापुष्पलतावृतम् त
तोददर्शनगरंत्रिकूटाचलमूर्धनि ४० प्राकारैर्बहुभिर्युक्तंपरिखाभिश्चसर्वतः प्रवेक्ष्यामिकथंलंकामितिचिंताप
रोभवत् ४१ रात्रौवेक्ष्यामिसूक्ष्मोऽहंलंकांरावणपालिताम् एवंविचिंत्यतत्रैवस्थित्वालंकांजगामसः ४२ धृ-
त्वासूक्ष्मंवपुर्द्वारंप्रविवेशप्रतापवान् तत्रलंकापुरीसाक्षाद्राक्षसीवेषधारिणी ४३

प्रसारयत् प्रसारयत अडभावआर्षः ३७ सिंहिकाम् तन्नाम्नींराक्षसीम् ३८ दक्षिणंकूलंसागरस्येतिशेषः ३९ ४० बहुभिःप्राकारैः अंतर्दुर्गमध्ये
दुर्गबहिर्दुर्गसंबंधिभिः परिखाःप्राकारबहिर्गताः ४१ वेक्ष्यामिप्रवेक्ष्यामिसूक्ष्मःसूक्ष्मशरीरोभूत्वेत्यर्थः लंकांजगाम रात्राविति शेषः ४२ सूक्ष्मं
वपुर्धृत्वाद्वारंप्रविवेश ४३ ७ ७ ७ ७ ७

२१ २२ २३ पुनर्गत्वाकिष्किंधामितिशेषः २४ २५ मणिकांचनपर्वतंमण्यादियुक्तशृंगयुक्तंपर्वतम् २६ सचिवोभवमध्येविश्रामदानेनसहायोभ वेत्यर्थः तत्सहायार्थनिमित्तंमत्प्रेरणेकोहेतुस्तत्राह सगरैरिति पुरापूर्वंसगरैर्वर्धितइतिहेतोरहंसागरस्तन्नामाऽभवम् २७ तस्यवंशेन्वरा-

ततश्चकारस्फुरसापंचाशद्योजनायतम् वक्त्रंतदाहनूमांस्तुबभूवांगुष्ठसन्निभः २१ प्रविश्यवदनंतस्याःपुनरे त्यपुरःस्थितः प्रविष्टोनिर्गतोऽहंतेवदनंदेवितेनमः २२ एवंवदंतंदृष्ट्वासाहनूमंतमथाऽब्रवीत् गच्छसाधयराम- स्यकार्यंबुद्धिमतांवर २३ देवैःसंप्रेषिताहंतेबलंजिज्ञासुभिःकपे दृष्ट्वासीतांपुनर्गत्वारामंद्रक्ष्यसिगच्छभो २४ इत्युक्त्वासाययौदेवलोकंवायुसुतःपुनः जगामवायुमार्गेणगरुत्मानिवपक्षिराट् २५ समुद्रोऽप्याहमैनाकंमणि कांचनपर्वतम् गच्छत्येषमहासत्त्वोहनुमान्मारुतात्मजः २६ रामस्यकार्यसिद्ध्यर्थंतस्यत्वंसचिवोभव सगरै र्वर्धितोयस्मात्पुराहंसागरोऽभवम् २७ तस्यान्वयेबभूवासौरामोदाशरथिःप्रभुः तस्यकार्यार्थसिद्ध्यर्थंगच्छ त्येषमहाकपिः त्वमुत्तिष्ठजलात्तूर्णंत्वयिविश्राम्यगच्छतु सतथेतिप्रादुरभूज्जलमध्यान्महोन्नतः २९ नाना मणिमयैःशृंगैस्तस्योपरिनराकृतिः प्राहयांतंहनूमंतंमैनाकोऽहंमहाकपे ३० समुद्रेणसमादिष्टस्त्वद्विश्रामायमा रुते आगच्छामृतकल्पानिजग्ध्वापक्वफलानिमे ३१ विश्राम्यात्रक्षणंपश्चाद्गमिष्यसियथासुखम् एवमुक्तोऽथतंप्रा हहनूमान्मारुतात्मजः ३२

मस्तत्कार्यार्थंचायंगच्छति २८ अतस्त्वमुत्तिष्ठेत्यन्वयः २९ नानामणिमयैःशृंगैर्महोन्नतइत्यन्वयः तस्योपरिनराकृतिर्मनुष्याकारेणास्थितोमैनाकःप्राह ३० ३१ विश्राम्येत्यार्षम् ३२

५६ यतोमेराघवस्मृतिरासीद्‌तोऽहमपिधन्या तद्भक्तसंगस्यापिदुर्लभत्वंकिंवक्तव्यमितिभावः प्रसीदतांप्रसन्नःसआस्ताम् ५७
पुस्फोरस्फुरितमभवत् भुजोवामएवस्त्रियावामांगस्फुरणंशुभसूचकंपुंसोऽशुभदमितिभावः अतींद्रियस्यइंद्रियाविषयस्यराम
स्यदक्षांगंपुस्फोर यद्वा रामसंबंधिअतींद्रियंगुह्यंयदिंद्रियंतस्यदक्षांगंदक्षिणभागःपुस्फोरतत्स्फुरणंचस्त्रीलाभसूचकंपुंसामि



तत्रास्तेजानकीघोरराक्षसीभिःसुरक्षिता दृष्ट्वैवगच्छत्वरितंराघवायनिवेदय ५६ धन्याहमप्यद्य
चिरायराघवस्मृतिर्ममासीद्भवपाशमोचनी तद्भक्तसंगोऽप्यतिदुर्लभोममप्रसीदतांदाशरथिःसदा
हृदि ५७ उल्लंघितेऽब्धौपवनात्मजेनधरासुतायाश्चदशाननस्य पुस्फोरवामाक्षिभुजश्चतीव्ररामस्यदक्षांगमतींद्रियस्य ५८ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेसुंदरकांडेप्रथमःसर्गः १
ततोजगाममहनुमाँल्लंकांपरमशोभनाम् रात्रौसूक्ष्मतनुर्भूत्वाबभ्रामःपरितःपुरीम् १ सीताऽन्वेषणका
र्यार्थीप्रविवेशनृपालयम् तत्रसर्वप्रदेशेषुविविच्यहनुमान्कपिः २ नापश्यज्जानकींस्मृत्वाततोलंका
भिभाषितम् जगामहनुमान्छीघ्रमशोकवनिकांशुभाम् ३ सुरपादपसंबाधांरत्नसोपानवापिकाम्
नानापक्षिमृगाकीर्णांस्वर्णप्रासादशोभिताम् ४ फलैरानम्रशाखाग्रपादपैःपरिवारिताम् विचिन्व
न्जानकींतत्रप्रतिवृक्षंमरुत्सुतः ५

त्याहुः ५८ इतिश्रीमत्सकल० अध्यात्मरामायणेसेतौसुंदरकांडेप्रथमः
सर्गः १ ततइति सूक्ष्मतनुःसूक्ष्मवानररूपः १ सीताऽन्वेषणकार्यार्थीसीताऽन्वेषणरूपकार्येच्छावान् विविच्यदृष्ट्वा २ ३
ततोलंकावाक्यंस्मृत्वाहनूमान्छीघ्रंजगाम ३ सुरपादपाःकल्पवृक्षादयः ४ फलैरानम्राणिशाखाग्राणियेषांतैःपादपैः ५

४४ रात्रौचोरवत्प्रविश्यगच्छसीतिशेषः सलंकइत्येकः किंभवानित्यादिप्रश्नांतरम् ४५ ४६ ४७ अष्टाविंशतिपर्ययेइति यद्यपिअ न्यत्रचतुर्विंशतिमेपर्यायेत्रेतायांरामावतारोऽष्टाविंशतिमेपर्यायेद्वापरांतेकृष्णावतारइत्युक्तंतथाऽपिकल्पांतरपरतयाविरोधपरिहारोऽ

प्रविशंतंहनूमंतंदृष्ट्वालंकाव्यतर्जयत् कस्त्वंवानररूपेणमामनादृत्यलंकिनीम् ४४ प्रविश्यचोरवद्रात्रौ किंभवान्कर्तुमिच्छति इत्युक्त्वारोषताम्राक्षीपादेनाभिजघानतम् ४५ हनूमानपितांवाममुष्टिनाऽव ज्ञयाहनत् तदैवपतितांभूमौरक्तमुद्वमतीभृशम् ४६ उत्थायप्राहसालंकाहनूमंतंमहाबलम् हनु मन्गच्छभद्रंतेजितालंकात्वयानघ ४७ पुराऽहंब्रह्मणाप्रोक्ताह्यष्टाविंशतिपर्यये त्रेतायुगेदाशर थीरामोनारायणोऽव्ययः ४८ जनिष्यतेयोगमायासीताजनकवेश्मनि भूभारहरणार्थायप्रार्थितोऽयं मयाक्वचित् ४९ सभार्योराघवोभ्रात्रागमिष्यतिमहावनम् तत्रसीतांमहामायांरावणोपहरिष्यति ५० पश्चाद्रामेणसाचिव्यंसुग्रीवस्यभविष्यति सुग्रीवोजानकींद्रष्टुंवानरान्प्रेषयिष्यति ५१ तत्रैकोवान रोरात्रावागमिष्यतितेऽतिकम् त्वयाचभर्त्सितःसोऽपित्वांहनिष्यतिमुष्टिना ५२ तेनाहतात्वंव्यथिता भविष्यसियदाऽनघे तदैवरावणस्यांतोभविष्यतिनसंशयः ५३ तस्मात्त्वयाजितालंकाजितंसर्वंत्वयाऽ नघ रावणांतःपुरवरेक्रीडाकाननमुत्तमम् ५४ तन्मध्येऽशोकवनिकादिव्यपादपसंकुला अस्तितस्यां महावृक्षःशिंशपानामसध्यगः ५५

वसेयः ४८ योगमायाचसीतेतिजनिष्यतेइत्यन्वयः क्वचित् अवतारपूर्वकालेप्रार्थितोजनिष्य तेइत्यन्वयः ४९ ५० साचिव्यंसख्यम् ५१ ५२ ५३ यतस्त्वयाऽहंलंकाजितातस्मात्त्वयासर्वंराक्षसकुलंजितम् अथसीतास्थितिस्थानमाह रावणांतःपुरेति ५४ ५५

इत्येवंचिंतयनूरावणोराघवेणेतिश्लोकोक्तंचिंतयन्नित्यंसदात्हृदिराममेवध्यायन्नास्तइतिशेषः अतस्तस्मिन्दिनेपररात्रौहनूमत्प्र
वेशादिनरात्रिंसंबध्यपरेरात्रेइत्यर्थः समासांताभावस्तदनित्यत्वात् १६ स्वप्नेनिद्रासमयेरामादिष्टःकश्चिद्वानरोलंकामागत्यवृ
क्षाग्रस्थोऽनुपश्यति सीतामितिशेषः १७ इतिअद्भुतंस्वप्नंदृष्ट्वाअयंस्वप्नःकदाचित्सत्योभवेत् अतस्तत्रसीतासमीपंगत्वाएवंकरो

इत्येवंचिंतयन्नित्यंराममेवसदात्हृदि तस्मिन्दिनेपरेरात्रौरावणोराक्षसाधिपः १६ स्वप्नेरामेणसंदिष्टःकश्चि
दागत्यवानरः कामरूपधरःसूक्ष्मोवृक्षाग्रस्थोऽनुपश्यति १७ इतिदृष्ट्वाऽद्भुतस्वप्नंस्वात्मन्येवानुचिंत्यसः
स्वप्नःकदाचित्सत्यःस्यादेवंतत्रकरोम्यहम् १८ जानकींवाक्शरैर्विध्यद्दुःखितांनितरामहम् करोमिदृष्ट्वा
रामायनिवेदयतुवानरः १९ इत्येवंचिंतयन्सीतासमीपमगमद्द्रुतम् नूपुराणांकिंकिणीनांश्रुत्वासिंजितमंग
ना २० सीताभीतालीयमानास्वात्मन्येवसुमध्यमा अधोमुख्यश्रुनयनास्थितारामार्पितांतरा २१ रावणोऽ
पितदासीतामालोक्याहसुमध्यमे मांदृष्ट्वाकिंवृथासुभ्रुस्वात्मन्येवविलीयसे २२ रामोवनचराणांहिमध्येति
ष्ठतिसानुजः कदाचिद्दृश्यतेकैश्चित्कदाचिन्नैवदृश्यते २३ मयातुबहुधालोकाःप्रेषितास्तस्यदर्शने नपश्यंति
प्रयत्नेनवीक्ष्यमाणाःसमंततः २४ मीति अचिंतयदितिशेषः १८ यदचिंतयत्तदाह जानकीमिति विध्येतितल्यबार्षः तांवाक्शरैर्वि
ध्वानितरांदुःखितांकरोमितदृष्ट्वावानरोरामायनिवेदयतु एवंहिरामःशीघ्रंआगच्छेदितिभावः १९ नूपुराणिपादभूषणानि किंकिण्योजघनभू
षणानि सिंजितंशब्दम् २० भीतासीतारूपांगनास्वात्मन्येवशरीरेएवलीयमानास्थितेत्यन्वयः रामेऽर्पितंस्थापितमंतरंचित्तंयया २१ ४
किमाहतदाह सुभ्रुमध्यमेइत्यादि २२ २३ लोकाःचाररूपाःप्रयत्नेनसमंततोवीक्ष्यमाणाअपिरामंनपश्यंति २४ ६७ ६७

अभ्रलिहमत्युच्चंचैत्यप्रासादंदेवतास्थानविशेषम् अत्युच्चत्वान्मणिस्तंभादियुतत्वाच्चविस्मयम् ६ समतीत्येति चैत्यप्रासादमि
तिशेषः ७ अत्यंतनिबिडपत्रत्वादेवादृष्टआतपोयत्रजनैस्तम् स्वर्णवर्णविहंगमैःपक्षिभिराकीर्णव्याप्तमित्यर्थेमयूरव्यंसकादित्वा
त्समासः ८ एकवेणींहरणादिनायधिसंस्काररहितामित्यर्थः यद्वा शोभार्थमन्यदावेणीत्रयबंधःपुरतोद्वयंपश्चादेकेति संप्रति

ददर्शाभ्रलिहंतत्रचैत्यप्रासादमुत्तमम् दृष्ट्वाविस्मयमापन्नोमणिस्तंभशतान्वितम् ६ समतीत्यपुनर्ग
त्वाकिंचिद्दूरंसमारुतिः ददर्शशिंशपावृक्षमत्यंतनिबिडच्छदम् ७ अदृष्टातपमाकीर्णंस्वर्णवर्णविहं
गमम् तन्मूलेराक्षसीमध्येस्थितांजनकनंदिनीम् ८ ददर्शहनुमान्वीरोदेवतामिवभूतले एकवेणीं
कृशांदीनांमलिनांबरधारिणीम् ९ भूमौशयानांशोचंतींरामरामेतिभाषिणीम् त्रातारंनाधिगच्छंती
मुपवासकृशांशुभाम् १० शाखांतच्छदमध्यस्थोददर्शकपिकुंजरः कृतार्थोऽहंकृतार्थोऽहंदृष्ट्वाजन
कनंदिनीम् ११ मयैवसाधितंकार्यंरामस्यपरमात्मनः ततःकिलकिलाशब्दोबभूवांतःपुराद्बहिः १२
किमेतदितिसंलीनोवृक्षपत्रेषुमारुतिः आयांतंरावणंतत्रस्त्रीजनैःपरिवारितम् १३ दशास्यंविंशति
भुजंनीलांजनचयोपमम् दृष्ट्वाविस्मयमापन्नःपत्रखंडेष्वलीयत १४ रावणोराघवेणाशुमरणंमेक
थंभवेत् सीतार्थमपिनायातिरामःकिंकारणंभवेत् १५

तुसंस्काररहितत्वात्पृष्ठलंबिनीएकैवेत्यर्थः दीनांस्वजनविर
हाद्दीनामिवशोचंतींआत्मानमितिशेषः ९ १० शाखानामंतेप्रांतेयेछदाःपत्राणितेषांमध्यस्थःतद्दर्शनजानंदाभिनयःकृतार्थइत्यादि ११
१२ किमेतत् किंजन्योयंशब्दः १३ अलीयत तद्दर्शनेनकरिष्यमाणकार्यभंगभियेतिभावः १४ १५ ६२ ६२

निधायतृणमंतरेपतिव्रतायाः साक्षात्परपुरुषेणवार्तालापस्यानौचित्यादितिभावः त्वंचतृणतुल्यइत्यपिद्योतयितुंच ३१ शुनीवेत्यु
पमयाअत्यंतंपराक्रमराहित्यंसूचितम् ३२ अचिरादितिच्छेदः अल्पेनैवकालेनेत्यर्थः यदारामशराघातैर्विदारितवपुर्भवान्भवि
ष्यतीतिशेषः तदाराममानुषंज्ञास्यसियमांतिकंचगमिष्यसि शरैःसमुद्रंशोषयित्वावा अथअथवावारिधिंबध्वासेतुबंधनेतिशेषः

रावणस्यवचःश्रुत्वासीतामर्षसमन्विता उवाचाधोमुखीभूत्वानिधायतृणमंतरे ३१ राघवाद्विभ्यतानू
नंभिक्षुरूपंत्वयाधृतम् रहितेराघवाभ्यांत्वंशुनीवहविरध्वरे ३२ हृतवानसिमानीचतत्फलंप्राप्स्यसेऽ
चिरात् यदारामशराघातविदारितवपुर्भवान् ३३ ज्ञास्यसेमानुषंरामंगमिष्यसियमांतिकम् समुद्रंशोष
यित्वावाशरैर्बध्वाऽथवारिधिम् ३४ हंतुंत्वांसमरेरामोलक्ष्मणेनसमन्वितः आगमिष्यत्यसंदेहोद्रक्ष्यसेरा
क्षसाधम ३५ त्वांसपुत्रंसहबलंहत्वानेष्यतिमांपुरम् श्रुत्वारक्षःपतिःक्रुद्धोजानक्याःपरुषाक्षरम्
३६ वाक्यंक्रोधसमाविष्टःखड्गमुद्यम्यसत्वरः हंतुंजनकराजस्यतनयांताम्रलोचनः ३७ मंदोदरीनिवा
र्याहपतिंपतिहितेरता त्यजेनांमानुषींदीनांदुःखितांकृपणांकृशाम् ३८ देवगंधर्वनागानांबह्व्यःसंतिव
रांगनाः त्वामेववरयंत्युच्चैर्मदमत्तविलोचनाः ३९

३४ तदागमनंचत्वमनुपदमेवद्रक्ष्यसेइत्यन्वयः ३५ जानक्याः
परुषाक्षरंवाक्यंश्रुत्वाक्रुद्धोऽभवत्इतिशेषः ३६ ततःक्रोधसमाविष्टःखड्गमुद्यम्यजनकराजतनयांहंतुमुद्यतोऽभवदितिशेषः ३७
अन्यानुरक्तत्वात्तद्वियोगाच्चदैन्यादिविशिष्टाम् ३८ यास्त्वामेववरयंतिताबह्व्यःसंतीतियोजना मदेनकाममदेनमत्तेमदयुक्ते
इवविलोचनेयासांताः ३९

6

त्वयिनिस्पृहेणइच्छाहीनेनपूर्णकामत्वादित्यांतरोऽर्थः त्वयासदाऽलिंगितोऽपिध्यानेनसदात्वद्धृदिचिंतनात् अतएवसमीपस्थोऽपि यद्वा शक्तिशक्तिमतोरभेदात्सदालिंगितोविभुत्वाच्चसमीपस्थोयद्यपि २५ तथाऽप्यस्यरामस्यत्वद्धृदयेत्वयिहृद्विषयेस्नेहोनजायते अत एवेयत्कालंत्वदुपेक्षातस्येतिभावः सर्वत्रसमत्वात्तस्यनक्वापिस्नेहइतितत्त्वम् किंच त्वत्कृतान्सर्वभोगांस्त्वयास्ववृत्तिद्वारोपनीतान्सर्व भोगान्सर्वविषयान्तथात्वद्गुणान्क्षस्वसंकल्पकामादीन्भुंजानोऽपिअहंभोक्तेतिनजानातितथाभिमानराहित्यात् अतएवकृतघ्नः अतएव निर्गुणः योहिगुणवान्सउपकारंमनुतएव अधमःउपकारविस्मरणात् किंच नधमतिशब्दविषयोभवतीत्यधमशब्दवाच्यइतिया

किंकरिष्यसिरामेणनिस्पृहेणसदात्वयि त्वयासदाऽलिंगितोऽपिसमीपस्थोऽपिसर्वदा २५ हृदयेऽस्यन चस्नेहस्त्वयिरामस्यजायते त्वत्कृतान्सर्वभोगांश्चत्वद्गुणानपिराघवः २६ भुंजानोऽपिनजानातिकृतघ्नो निर्गुणोऽधमः त्वमानीतामयासाध्वीदुःखशोकसमाकुला २७ इदानीमपिनायातिभक्तिहीनःकथंव्रजेत् निःसत्वोनिर्ममोमानीमूढःपंडितमानवान् २८ नराधमंत्वद्विमुखंकिंकरिष्यसिभामिनि त्वय्यतीवसमा सक्तंमाभजस्वासुरोत्तमम् २९ देवगंधर्वनागानांयक्षकिन्नरयोषिताम् भविष्यसिनियोक्त्रीत्वंयदिमांप्रतिपद्यसे ३०

वत् कृतघ्नत्वाद्रूपपादयति त्वमिति २६ २७ यतस्त्वयिभक्तिहीनोऽतःकथंव्रजेत् स्वस्थानतस्त्वत्परित्राणार्थमिदंदेशमित्य र्थः निःसत्वोनिर्बलः निर्ममोममताहीनः त्वयिइयंममेतिबुद्धिहीनः २८ नराधमंपंचम्यर्थेबहुव्रीहिरितिकश्चित् किंकरिष्यसि तादृशेऽनुरागेणकिंप्रयोजनमित्यर्थः असुरोत्तममितिनराधमव्यतिरेकउक्तः २९ देवगंधर्वनागानांतद्योषितामित्यर्थः नियो- क्त्रीप्रभुतयाआज्ञापयित्री प्रतिपद्यसेअंगीकरोषि ३० ६७ ६७ ६७ ६७ ६७

स्वांकेजानकीमारोप्य अगस्यपर्वतस्यमूर्धनिऊर्ध्वभागेस्थितोदृष्टः एवंरामविषयंशुभस्वप्नमुक्त्वारावणविषयमनिष्टस्वप्नमाह रावणइति
५१ वदनमालिकांस्वमुंडमालांस्वहस्तेकृत्वाऽगाहदित्यर्थः नन्वेवंकिंलंकाराक्षसैवभविष्यतीत्याशंक्यनेत्याह बिभीषणइतिराम
स्यसेवांकरोति एवंविधःस्वप्नेदृष्टोऽतःसोऽत्रराज्यंकर्त्तेत्याह सर्वथेत्यादि ५२ ५३ ५४ ५५ त्रातारमप्राप्नुवती दुःखेनमू

आरोप्यजानकींस्वांकेस्थितोदृष्टोऽगमूर्धनि रावणोगोमयन्हृदेतैलाभ्यक्तोदिगंबरः ५१ अगाहत्पुत्रपौत्रै
श्चकृत्वावदनमालिकाम् बिभीषणस्तुरामस्यसन्निधौहृष्टमानसः ५२ सेवांकरोतिरामस्यपादयोर्भक्ति
संयुतः सर्वथारावणंरामोहत्वासकुलमंजसा ५३ बिभीषणायाधिपत्यंदत्वासीतांशुभाननाम् अंकेनि
धायस्वपुरींगमिष्यतिनसंशयः ५४ त्रिजटायावचःश्रुत्वाभीतास्ताराक्षसस्त्रियः तूष्णीमासंस्तत्रतत्रनि
द्रावशमुपागताः ५५ तर्जिताराक्षसीभिःसासीताभीताऽतिविह्वला त्रातारंनाधिगच्छंतीदुःखेनपरिमू
र्च्छिता ५६ अश्रुभिःपूर्णनयनाचिंतयंतीदमब्रवीत् प्रभातेभक्षयिष्यंतिराक्षस्योमांनसंशयः इदानीमेव
मरणंकेनोपायेनमेभवेत् ५७ एवंसुदुःखेनपरिप्लुतासाविमुक्तकंठंरुदतीचिराय आलंब्यशाखांकृतनि
श्चयामृतौनजानतीकंचिदुपायमंगना ५८ इतिश्रीमदध्यात्मरामायणेउमामहेश्वरसंवादेसुंदरकांडे
द्वितीयःसर्गः २ श्रीमहादेवउवाच उद्बंधनेनवामोक्ष्येशरीरंराघवंविना जीवितेनफलंकिंस्यान्ममरक्षोऽधि
मध्यतः १

र्च्छितामूर्च्छितेवाऽश्रुयुक्तनेत्राचिंतयंतीदमात्मनासहाऽब्रवीत् ५६ ५७ मृतौकृतनिश्चयामरणस्यकंचिदुपायंकमप्यु ६
पायमजानतीशाखामालंब्यचिरायातिष्ठदितिशेषः ५८ इतिश्रीमत्सकलराजधिप॰सेतौसुंदरकांडेद्वितीयःसर्गः२ ततस्तदुपायंनि
श्चित्याहोद्बंधनेनवेति १

सकामनामद्विषयकामनासतीयथामेवशगाभविष्यति नतुबलात्तथायतध्वमित्यन्वयः तर्जनंभीषणम् आदरणंसांत्वम् ४० ४१
कुरुतपक्षांकुरुतेत्यर्थः ४२ स्वतर्जनैःस्वबुद्धिकल्पितभीषणोपायैःस्वक्रौर्ययोग्यैर्वा ४३ इदंसांत्वस्याऽप्युपलक्षणंतदेवाह तत्रैकेति

ततोऽब्रवीद्दशग्रीवोराक्षसीर्विकृताननाः यथामेवशगासीताभविष्यतिसकामना तथायतध्वंत्वरितंत
र्जनादरणादिभिः ४० द्विमासाभ्यंतरेसीतायदिमेवशगाभवेत् तदासर्वसुखोपेताराज्यंभोक्ष्यतिसामया
४१ यदिमासद्वयादूर्ध्वंमच्छय्यांनाभिनंदति तदामेप्रातराशायहत्वाकुरुतमानुषीम् ४२ इत्युक्त्वाप्रय
यौस्त्रीभीरावणोऽतःपुरालयम् राक्षस्योजानकीमेत्यभीषयंत्यःस्वतर्जनैः ४३ तत्रैकाजानकीमाहयो
वनंतेवृथागतम् रावणेनसमासाद्यसफलंतुभविष्यति ४४ अपराचाहकोपेनकिंविलंबेनजानकी इ
दानींछेद्यतामंगंविभज्यचपृथक्पृथक् ४५ अन्यातुखड्गमुद्यम्यजानकींहंतुमुद्यता अन्याकरालव
दनाविदार्यास्यमभीषयत् ४६ एवंतांभीषयंतीस्ताराक्षसीर्विकृताननाः निवार्यत्रिजटावृद्धाराक्षसीवा
क्यमब्रवीत् ४७ शृणुध्वंदुष्टराक्षस्योमद्वाक्यंवोहितंभवेत् ४८ नभीषयध्वंरुदतींनमस्कुरुतजान
कीम् इदानीमेवमेस्वप्नेरामःकमललोचनः ४९ आरुह्यैरावतंशुभ्रंलक्ष्मणेनसमागतः दग्ध्वालं
कांपुरींसर्वांहत्वारावणमाहवे ५० ४४ भीषणान्याह अपराचेति किंविलंबेन अस्यावधेइतिशेषः जानकीं
इदानीमेवछेद्यताम् अस्याअंगंपृथक्पृथक्विभज्यपच्यतामितिशेषः ४५ ४६ ४७ मद्वाक्यंशृणुध्वम् यच्छ्रुतंसद्वो
हितंभवेत् ४८ वाक्यमाह नेति इदानीमेवमेमयारामःस्वप्नेदृष्टइत्यन्वयः ४९ कथंदृष्टस्तदाह आरुह्येति समागतःसंयुक्तः ५०

समुद्रमुल्लंघ्यलंकानगरीं दृष्ट्वातत्रतत्रजानकीं विचिन्वन् अन्वेषयन् शनैः क्रमेणाशोकवनिकां दृष्ट्वातत्रतां विचिन्वन् शिंशपातरुं दृष्टवान् अत्रशिंशपामूलेजानकीमद्राक्षमतोऽयागतोऽहम् कृतकृत्यः संवृत्तइतिशेषः १३ १४ १५ वायुनेति तस्यजगत्क्रियासाक्षित्वात्तेन कथितत्वसंभावना १६ स्वप्नोवेत्यादि विकल्पत्रयंसत्यस्वप्नभ्रमातिरिक्तंकिंचित्कर्तृकंप्रमाजनकंवास्यमित्यर्थः तत्रदुःखहेतुना

संपातिवचनाच्छीघ्रमुल्लंघ्यशतयोजनम् समुद्रंनगरींलंकांविचिन्वन्जानकींशुभाम् १३ शनैरशोकवनिकांविचिन्वन्शिंशपातरुम् अद्राक्षजानकीमत्रशोचतींदुःखसंप्लुताम् १४ रामस्यमहिषींदेवींकृतकृत्योऽहमागतः इत्युक्त्वापरराभाथमारुतिर्बुद्धिमत्तरः १५ सीताक्रमेणतत्सर्वंश्रुत्वाविस्मयमाययौ किमिदंमेश्रुतंव्योम्निवायुनासमुदीरितम् १६ स्वप्नोवामेमनोभ्रान्तिर्यदिवासत्यमेवतत् निद्रामेनास्तिदुःखेन जानाम्येतत्कुतोभ्रमः १७ येनमेकर्णपीयूषंवचनंसमुदीरितम् सदृश्यतांमहाभागःप्रियवादीममाग्रतः १८ श्रुत्वातज्जानकीवाक्यंहनूमान्पत्रखंडतः अवतीर्यशनैःसीतापुरतःसमवस्थितः १९ कलविंकप्रमाणांगोरक्तास्यःपीतवानरः ननामशनकैःसीतांप्रांजलिःपुरतःस्थितः २० दृष्ट्वातंजानकीभीतारावणोऽयमुपागतः मांमोहयितुमायातोमाययावानराकृतिः २१

निद्राऽभावात्स्वप्नस्यासंभवः भ्रमोपिनेत्याह जानाम्येतत् एतत्पदार्थजातंयथास्थितस्वरूपेणजानामि अतोनभ्रमसंभवः यद्वा भ्रान्तिःस्वाज्ञानेभ्रमत्वंनविकल्पयतिममचतथाविकल्पोऽतोनभ्रमइतिभावः १७ तस्मात्सत्यत्वमेवनिश्चित्याह येनेति समम्माग्रतोदृश्यतां ममाग्रतोभूत्वाऽऽत्मानंदर्शयत्वित्यर्थः १८ पत्रखंडतः १९ भाषायांचिमनाचिमनी कलविंकश्चटकः चटकःकलविंकःस्यात्तस्यस्त्रीचटकातयोः पुमपत्येचाटकैरस्त्र्यपत्येचटकैवहि इत्यमरः पीतवर्णोवानरः पीतवानरः २० २१

८

उद्बंधनसाधनमाह दीर्घवेणीति अथानंतरंएवंमरणायनिश्चितबुद्धिंजानकींविलोक्येत्यन्वयः २ किंचिद्विचार्यअयंवचनावसर इतिनिश्चित्यसूक्ष्मरूपःसन् जानक्यास्तस्याएवश्रोत्रगंयथाभवतितथाशनैःशनैरभाषतेत्यन्वयः ३ तदुचआह इक्ष्वाकिति ४

दीर्घवेणीममात्यर्थमुद्बंधायभविष्यति एवंनिश्चितबुद्धिंतांमरणायाथजानकीम् २ विलोक्यहनुमान्किंचि द्विचार्यैतदभाषत शनैःशनैःसूक्ष्मरूपोजानक्याःश्रोत्रगंवचः ३ इक्ष्वाकुवंशसंभूतोराजादशरथोमहान् अ योध्याधिपतिस्तस्यचत्वारोलोकविश्रुताः ४ पुत्रादेवसमाःसर्वैर्लक्षणैरुपलक्षिताः रामश्चलक्ष्मणश्चैवभरत श्चैवशत्रुहा ५ ज्येष्ठोरामःपितुर्वाक्याद्दंडकारण्यमागतः लक्ष्मणेनसहभ्रात्रासीतयाभार्ययासह ६ उवास गौतमीतीरेपंचवट्यांमहामनाः तत्रनीतामहाभागासीताजनकनंदिनी ७ रहितेरामचंद्रेणरावणेनदुरात्म ना ततोरामोऽतिदुःखार्त्तोमार्गमाणोऽथजानकीम् ८ जटायुषंपक्षिराजमपश्यत्पतितंभुवि तस्मैदत्वादि वंशीघ्रंऋष्यमूकमुपागमत् ९ सुग्रीवेणकृतामैत्रीरामस्यविदितात्मनः तद्भार्याहारिणंहत्वावालिनंरघुनं दनः १० राज्येऽभिषेच्यसुग्रीवंमित्रकार्यंचकारसः सुग्रीवस्तुसमानाय्यवानरान्वानरप्रभुः ११ प्रेषयामा सपरितोवानरान्परिमार्गणे सीतायास्तत्रचैकोऽहंसुग्रीवसचिवोहरिः १२ लक्षणैःसामुद्रिकोक्तोत्तमलक्षणैःशत्रु

हाशत्रुघ्नाख्यइत्यर्थः ५ ६ रावणेननीतेत्यन्वयः ७ मार्गमाणःअन्वेषयन् ८ दिवंस्वर्लोकंतल्लोकवासमितियावत् ९ रामस्यसंकल्पमा त्रात्सर्वसाधकस्यनवानरमैत्र्याःप्रयोजनमित्यौद्धत्यपरिहारायसुग्रीवेणकृतेत्युक्तंनतुरामेणकृतेतितद्भार्याहारिणंसुग्रीवभार्याहारिणम् १० मित्रकार्यंसुग्रीवकृतमित्रत्वकार्यंसहायभूतान्समानीयनानापर्वतादिभ्योदूतैर्वानरान्किष्किंधांसमानाय्य ११ तान्वानरान्सीतायाःपरिमार्गणे तन्निमित्तंपरितःप्रेषयामासेत्यन्वयः १२

मेएतदंगुलीयकंसीतायैपरिज्ञानार्थंरामायएवायमितिनिश्चयार्थंदीयताम् मन्नामाक्षरमुद्रितंमन्नामाक्षरमुद्रयायुतम् ३४ ३५नम
स्कृत्वामुद्रिकांददौपुनर्नमस्कृत्वाचदूरात्स्थितःअनेनदानवेलायांकिंचित्समीपमुपसृतइतिज्ञायते ३६ मुद्रिकांदृष्ट्वाप्रमुदिनाजाता
ततःशिरसाधृत्वा स्रवदानंदनेत्रजाजातास्रवंतिआनंदेननेत्रजान्यश्रूणियस्याःसा ३७ कपेमुद्रिकारक्षणाद्बुद्धिमांस्त्वंमेप्राणदाताऽसि

अंगुलीयकमेतन्मेपरिज्ञानार्थमुत्तमम् सीतायैदीयतांसाधुमन्नामाक्षरमुद्रितम् ३४ इत्युक्त्वाप्रददौमह्यं
कराग्राद्ंगुलीयकम् प्रयत्नेनमयाऽनीतंदेविपश्यांगुलीयकम् ३५ इत्युक्त्वाप्रददौदेव्यैमुद्रिकांमारुता
त्मजः नमस्कृत्वास्थितोदूराद्बद्धांजलिपुटोहरिः ३६ दृष्ट्वासीताप्रमुदितारामनामांकितांतदा मुद्रिकां
शिरसाधृत्वास्रवदानंदनेत्रजा ३७ कपेमेप्राणदातात्वंबुद्धिमानसिराघवे भक्तोऽसिप्रियकारीत्वंविश्वा
सोऽस्तितवैवहि ३८ नोचेन्मत्सन्निधिंचान्यंपुरुषंप्रेषयेत्कथम् हनूमन्दृष्टमखिलंममदुःखादिकंत्वया
३९ सर्वंकथयरामाययथामेजायतेदया मासद्वयावधिप्राणाःस्थास्यंतिममसत्तम ४० नागमिष्यतिचे
द्रामोभक्षयिष्यतिमांखलः अतःशीघ्रंकपींद्रेणसुग्रीवेणसमन्वितः ४१ वानरानीकपैःसार्द्धंहत्वारावण
माहवे सपुत्रंसबलंरामोयदिमांमोचयेत्प्रभुः ४२ राघवेभक्तोऽसितस्यप्रियकारीचासि अतोराघवस्यतवैवविश्वासोऽस्ती

तिमन्येच ३८ विश्वास्यतांयुक्त्यासाधयति नोचेत् त्वयिविश्वासश्चेन्नस्यात्तदाऽन्यमविश्वस्तंपुरुषरूपंत्वांकथंमत्सन्निधिंप्रेषयेत् ३९
यथामेमयिराघवस्यदयाजायतेतथासर्वंराक्षसीकृततर्जनादिकथयेत्यर्थः मासद्वयेति अग्रेमरणमेवत्वदग्रेएवरावणेनतथाप्रतिज्ञात ८
त्वादितिभावः ४० तदेवाह नागमिष्यतीति ४१ वानरानीकपैःसार्धमत्रागत्यरावणमुक्तविशेषणंहत्वायदिमांप्रभुर्मोचयेत् तत्कृतबंधना
दितिशेषः ४२

२२ शंकांरावणत्वशंकाम् परमात्मनइतितत्स्वरूपाभिज्ञत्वेनतद्दासत्वसत्यताप्रत्यायनाय २३ २४ २५ यथात्वंदासोहमितिभा
षसेतथावानरमनुष्ययोःसंगतिःप्रतीयतेसाऽत्रकथंघटतइत्यर्थः २६ शबर्येति भगवतात्वद्वृत्तांतेशबरींप्रतिपृष्टेसतिसुग्रीवसमीपंगच्छ

इत्येवंचिंतयित्वासातूष्णीमासीदधोमुखी पुनरप्याहतांसीतांदेवियत्त्वंविशंकसे २२ नाहंतथाविधोमात
स्त्यजशंकांमयिस्थिताम् दासोऽहंकोसलेंद्रस्यरामस्यपरमात्मनः २३ सचिवोऽहंहरींद्रस्यसुग्रीवस्यशु
भप्रदे वायोःपुत्रोऽहमखिलप्राणभूतस्यशोभने २४ तच्छ्रुत्वाजानकीप्राहहनूमंतंकृतांजलिम् वान
राणांमनुष्याणांसंगतिर्घटतेकथम् २५ यथात्वंरामचंद्रस्यदासोऽहमितिभाषसे तामाहमारुतिःप्रीतो
जानकींपुरतःस्थितः २६ ऋष्यमूकमगाद्रामःशबर्यानोदितःसुधीः सुग्रीवोऋष्यमूकस्थोदृष्टवान्राम
लक्ष्मणौ २७ भीतोमांप्रेषयामासज्ञातुंरामस्यतद्गतम् ब्रह्मचारिवपुर्धृत्वागतोऽहंरामसन्निधिम् २८ ज्ञा
त्वारामस्यसद्भावंस्कंधोपरिनिधायतौ नीत्वासुग्रीवसामीप्यंसख्यंचाकरवंतयोः २९ सुग्रीवस्यहृताभार्या
वालिनातंरघूत्तमः जघानैकेनबाणेनततोराज्येऽभ्यषेचयत् ३० सुग्रीवंवानराणांसःप्रेषयामासवानरान्
दिग्भ्योमहाबलान्वीरान्भवत्याःपरिमार्गणे ३१ गच्छंतंराघवोदृष्ट्वामामभाषतसादरम् ३२ त्वयिकार्यम
शेषंमेस्थितंमारुतनंदन ब्रूहिमेकुशलंसर्वंसीतायैलक्ष्मणस्यच ३३ ससीतामार्गणंकरिष्यतिइतितेनयोक्तइत्यर्थः २७

भीतोवालिप्रेरितत्वभ्रांत्या २८ तौरामलक्ष्मणौ सख्यंचअकरवंकारितवानित्यर्थः अंतर्भावितण्यर्थः २९ तंवालिनंजघानवानराणांराज्येऽ
भ्यषेचयत् सुग्रीवमित्यन्वयः ३० ससुग्रीवोभवत्याःपरिमार्गणेतन्निमित्तंवानरान्प्रेषयामास ३१ ३२ अशेषंकार्यंत्वयिस्थितम् त्वमेवसक
लकार्यसाधनेसमर्थःमेमम ३३

ऐंद्रः इंद्रलोकस्थः काकरूपधर इंद्रपुत्र इत्यर्थः आमिषं मांसम् ५४ एतत् त्वत्पादांगुष्ठविदारणरूपम् ५५ मां पुनः पुनरभिद्रवंतमित्यन्वयः
रक्तमास्यं नखतुंडं यस्य तम् ५६ ज्वलत्तत् अभिमंत्रितम् तृणं वायसमभ्यद्रवत् ५७ स वायसोऽपि भीतः लोकान् ऐंद्रब्रह्मातान् भ्रमन्तत्र



ऐंद्रःकाकस्तदाऽगत्यनखैस्तुंडेनचासकृत् मत्पादांगुष्ठमारक्तंविददारामिषाशया ५४ ततोरामःप्रबुध्याथ
दृष्ट्वापादंकृतव्रणम् केनभद्रेकृतंचैतद्विप्रियंमेदुरात्मना ५५ इत्युक्त्वापुरतोपश्यद्वायसंमांपुनःपुनः अभि
द्रवंतंरक्तास्यनखतुंडंचुकोपह ५६ तृणमेकमुपादायदिव्यास्त्रेणाभियोज्यतत् चिक्षेपलीलयारामोवा
यसोपरितज्ज्वलत् ५७ अभ्यद्रवद्वायसश्चभीतोलोकान्भ्रमन्पुनः इंद्रब्रह्मादिभिश्चापिनशक्योरक्षि
तुंतदा ५८ रामस्यपादयोरग्रेऽपतद्भीत्यादयानिधेः शरणागतमालोक्यरामस्तमिदमब्रवीत् ५९ अमोघ
मेतदस्त्रंमेदत्त्वैकाक्षमितोव्रज सव्यंदत्त्वाततःकाकएवंपौरुषवानपि ६० उपेक्षतेकिमर्थंमामिदानींसोऽ
पिराघवः हनूमानपितामाहश्रुत्वासीतानुभाषितम् ६१ देवित्वांयदिजानातिस्थितामत्ररघूत्तमः करि
ष्यतिक्षणाद्भस्मलंकांराक्षसमंडिताम् ६२ जानकीप्राहतंवत्सकथंत्वंयोत्स्यसेऽसुरैः अतिसूक्ष्मवपुःस
र्वेवानराश्चभवादृशाः ६३ श्रुत्वातद्वचनंदेव्यैपूर्वरूपमदर्शयत् मेरुमंदरसंकाशंरक्षोगणविभीषणम् ६४

10

तैरपियदारक्षितुंशक्योनाभवत्तदा ५८ रामपदाग्रेऽपतत् ५९ ततःकाकोगतइतिशेषः एवंपौरुषवानपिसराघवःइदानीमपिएवमवस्था
यामपियदुपेक्षतेतत्किमर्थम् ६० ६१ जानाति वर्त्तमानसामीप्येलट् ज्ञास्यतीत्यर्थः ६२ यथात्वंसूक्ष्मवपुस्तथासर्वेऽपिवानराभ ९
वादृशाःभवद्वदेवसूक्ष्मवपुषइति महावपुर्भीराक्षसैर्युद्धमसंभावितमित्यर्थः ६३ श्रुत्वातद्वचनंसीतायाइतिशेषः देव्यैसीतायै ६४

तत्तदा वीरवर्णयब्राह्मणैश्चवर्णितंतस्यवीर्यंसदृशंभवेत् यथावर्णितंभवेत् अन्यथाविपरीतमेवेत्यर्थः ४३ अतस्तथेति वा
चावचनकृतरामप्रेरणया धर्मंबंदीमोक्षजम् यथायथारूपोदृष्टस्तथाजानेशीघ्रमागमिष्यतीत्यादि ४४ ४५ तंहनूमंतंजा

तत्तस्यसदृशंवीर्यंवीरवर्णयवर्णितम् यथामांतारयेद्रामोहत्वाशीघ्रंदशाननम् ४३ तथायतस्वहनुमन्वा
चाधर्ममवाप्नुहि हनुमानपितामाहदेविदृष्टोयथामया ४४ रामःसलक्ष्मणःशीघ्रमागमिष्यतिसायुधः
सुग्रीवेणससैन्येनहत्वादशमुखंबलात् ४५ समानेष्यतिदेवित्वामयोध्यांनात्रसंशयः तमाहजानकीरामः
कथंवारिधिमाततम् ४६ तीर्त्वायास्यत्यमेयात्मावानरानीकपैःसह हनूमानाहमेस्कंधावारुह्यपुरुषर्षभौ
४७ आयास्यतःससैन्यश्चसुग्रीवोवानरेश्वरः विहायसाक्षणेनैवतीर्त्वावारिधिमाततम् ४८ निर्दहिष्य
तिरक्षौघांस्त्वत्कृतेनात्रसंशयः अनुज्ञांदेहिमेदेविगच्छामित्वरयान्वितः ४९ द्रष्टुंरामंसहप्याच्चात्वरयामि
तवांतिकम् देविकिंचिदभिज्ञानंदेहिमेयेनराघवः ५० विश्वसेन्मांप्रयत्नेनततोगंतासमुत्सुकः ततःकिं
चिद्विचार्याथसीताकमललोचना ५१ विमुच्यकेशपाशांतेस्थितंचूडामणिंददौ अनेनविश्वसेद्रामस्त्वां
कपींद्रसलक्ष्मणः ५२ अभिज्ञानार्थमन्यच्चवदामितवसुव्रत चित्रकूटगिरौपूर्वमेकदारहसिस्थितः
मदंकेशिरआधायनिद्रातिरघुनंदनः ५३

नकीआह किमाह रामइत्यादि ४६ हनूमानुत्तरयतिमेस्कंधावित्यादि ४७
आततंविस्तीर्णम् ४८ ४९ प्याचासहरामंद्रष्टुंगच्छामि गत्वाचतवांतिकमागंतुंत्वरयामिराघवःयथामांविश्वसेत् जानकींसर्वथाद
ष्टवानितितथाकिंचिदभिज्ञानंदेहि ५० ततोऽहंसमुत्सुकःरामदर्शनोत्सुकःप्रयत्नेनत्वद्दत्ताभिज्ञानंरक्षन्गंताराघवसमीपमितिशेषः किं
चिद्विचार्यतद्वचसोयुक्तत्वंविचार्य ५१ ५२ ५३

